# ॥ विद्यास्तोत्रमाला ॥



## Part I





N. RAJAM & CO.,

VEPERY, MADRAS.

Price 6 annas

1943.

## विषयसूची



---




ओं श्रीगुरुभ्यो नमः ।

श्रीराजराजेश्वर्यै नमः ॥

# ॥ श्रीविद्यास्तोत्रमाला ॥

——:o:——

## ॥ दिव्यमङ्गळाध्यानम् ॥

अस्य श्रीदिव्यमङ्गळाध्यानमहामन्त्रस्य आनन्ददक्षिणामूर्तिऋषये नमः । पङ्क्तिच्छन्दसे नमः । श्रीराजराजेश्वरीपरदेवतायै नमः ।

बालामनुभिः बीजशक्तिकीलकं कर्तव्यम् ।
श्रीराजराजेश्वरीप्रसादसिद्ध्यर्थे जपे विनियोगः ।
मूलेन करषडङ्गन्यासौ ।

ध्यानं—

आरक्ताभां त्रिनेत्रां मणिमकुटमयीमक्षमालां दधानां
हस्ताम्भोजैः सपाशाङ्कुशमदनधनुस्सायकैर्विस्फुरन्तीम् ।
आपीनोत्तुङ्गवक्षोरुहपरिविलसत्तारहारोज्ज्वलाङ्गीं
ध्यायेत्कामाङ्कसंस्थामरुणिमवसनामीश्वरीमीश्वराणाम् ॥

लमित्यादि पञ्चोपचारपूजा ॥

श्रीदेव्युवाच—

देवदेव महादेव सच्चिदानन्दविग्रह ।
पञ्चकृत्यपरेशान परमानन्ददायक ॥ १ ॥

श्रीराजराजराजेशी या श्रीत्रिपुरसुन्दरी ।
तस्या ध्यानं ममाचक्ष्व यदि ते करुणा मयि ॥ २ ॥

ईश्वर उवाच—

लक्षवारसहस्राणि वारितापि पुनः पुनः ।
स्त्रीस्वभावान्महादेवि पुनस्त्वं परिपृच्छसि ॥ ३ ॥

इतः पूर्वं मया नोक्तं गोप्याद्गोप्यतरं शिवे ।
येनाहमपि युद्धेषु देवासुरजयी सदा ॥ ४ ॥

निगमागमकोटीनां सारात्सारतरं शिवे ।
श्रीराजराजराजेश्या ध्यानं सर्वोत्तमोत्तमम् ॥ ५ ॥

तव स्नेहात्प्रवक्ष्यामि भोगमोक्षप्रदं नृणाम् ।
सर्वरोगारिमृत्युघ्नं सर्वसौभाग्यवर्धनम् ॥ ६ ॥

भूतप्रेतपिशाचादिकृत्यारिशमनं शुभम् ।
यद्ध्यानाज्जननीगर्भे न पुनर्जायते नरः ॥ ७ ॥

अनेककोटिब्रह्माण्डकोटीनां बहिरूर्ध्वतः ।
सहस्रकोटिविस्तीर्णसुधासिन्धोस्तु मध्यमे ॥ ८ ॥

रत्नद्वीपे जगद्दीपे शतकोटिप्रविस्तरे ।
पञ्चविंशतितत्त्वात्मपञ्चविंशतिवप्रकैः ॥ ९ ॥

नवरत्नमयैः स्तम्भैर्हाटकाकलितैः शुभैः ।
अनेककोटिविततैः मणिकुट्टिममण्डितैः ॥ १० ॥

जातीचम्पकपुन्नागकेतकीबकुलादिभिः ।
बिल्वैश्च सहकारैश्च कल्पकैश्च कदम्बकैः ॥ ११ ॥

मन्दारपारिजातैश्च संतानाद्यैः सुशोभितैः ।
सर्वर्तुकुसुमैः सर्ववाञ्छितार्थफलप्रदैः ॥ १२ ॥

वसन्तमन्मथानीकरक्षितैः पक्षिसंकुलैः ।
नदीनदसहस्रैश्च सुधाधिकरसोत्तमैः ॥ १३ ॥

स्वर्णदीशतसाहस्रैः कूलोद्यत्कल्पपादपैः ।
स्वर्णसारसहंसालिलसत्सौवर्णपङ्कजैः ॥ १४ ॥

अन्यैश्च विविधैः पक्षिलक्षैः पूर्णैः सुलक्षणैः ।
शतयोजनमुन्नम्रैः गोपुराट्टालमण्डपैः ॥ १५ ॥

रविकोटिसमप्रख्यैः काञ्चनैर्मणितोरणैः ।
अनेकादित्यसंकाशैर्विराजितदिगन्तरैः ॥ १६ ॥

त्रिलक्षयोजनायाममहापद्मवनावृते ।
सहस्रयोजनायामचिन्तामणिगृहान्तरे ॥ १७ ॥

नवशक्तिलसद्योगपीठे तत्वमयाम्बुजे ।
शतयोजनविस्तीर्णे श्रीचक्रान्तस्त्रिकोणके ॥ १८ ॥

चतुष्पीठान्तरे बिन्दौ चन्द्रसूर्याग्निकोटिभे ।
पञ्चब्रह्मात्मके मञ्चे सर्वतत्वमये शुभे ॥ १९ ॥

महामायायवनिकामहिते सुबृहत्तरे ।
सपदासनषट्कोणे चतुरासनगर्भिते ॥ २० ॥

तुर्यपीठान्तषट्त्रिंशत्तत्त्वोद्यद्धंसतूलिके ।
सर्वविद्यामये सर्वतेजोमयशुभास्तरे ॥ २१ ॥

कोटिकन्दर्पलावण्यश्रियवामाङ्कवासिनीम् ।
एककालोदितानेकचन्द्रकोट्यर्कपाटलाम् ॥ २२ ॥

कालाग्निकोटिसदृशां कान्त्या यावकलोहिताम् ।
जपाकुसुमसंकाशामजपामजपात्मिकाम् ॥ २३ ॥

प्रभापाटलितानेककोटिब्रह्माण्डमण्डलाम् ।
कुङ्कुमोदकसंकाशां दाडिमीकुसुमारुणाम् ॥ २४ ॥

बालार्ककोटिभां त्र्यक्षां बालेन्दुमकुटोज्वलाम् ।
पाशाङ्कुशेक्षुकोदण्डपञ्चबाणलसत्कराम् ॥ २५ ॥

अचञ्चलतटित्कोटिप्रभापिङ्गलवाससा ।
समावृतां सुवृत्तोरुजघनस्तनमण्डलाम् ॥ २६ ॥

कोटीरकोटिघटितसुधाकरसुधाप्लुताम् ।
अनर्घरत्नखचितमकुटाञ्चितमस्तकाम् ॥ २७ ॥

पारिजातप्रसूनश्रीवाहिधम्मिल्लबन्धनाम् ।
कुन्तालिमालाविलसदलकाढ्यमुखाम्बुजाम् ॥ २८ ॥

कलङ्कादर्शनिर्मुक्तशरच्चन्द्रनिभाननाम् ।
ललाटकान्तिविभवविजितार्धसुधाकराम् ॥ २९ ॥

सान्द्रसौरभ्यसंपन्नकस्तूरीतिलकाञ्चिताम् ।
फालभूतिलकीभूतलोचनां कामलोचनाम् ॥ ३० ॥

कटाक्षसरणीनिर्यत्करुणापूर्णवीक्षणाम् ।
भ्रूलताजितकन्दर्पकरकार्मुकविभ्रमाम् ॥ ३१ ॥

विकसत्तिलपुष्पश्रीविजयोद्यतनासिकाम् ।
सूर्येन्दुमण्डलाकारमणिताटङ्कमण्डिताम् ॥ ३२ ॥

शुक्राकारतिरस्कारिनासाभरणभासुराम् ।
रत्नाङ्कितलसत्स्वर्णकर्णपूरोपशोभिताम् ॥ ३३ ॥

जपाविद्रुमलावण्यललिताधरपल्लवाम् ।
दाडिमीबीजसंदोहसंदेहरदनावलीम् ॥ ३४ ॥

शीतांशुशतसंकाशकान्तिसंतानहासिनीम् ।
अनौपम्यगुणोपेतचिबुकोद्देशशोभिताम् ॥ ३५ ॥

वीणारवगुणादायिनिजवाणीगुणोदयाम् ।
कर्पूरवीटिकामोदसमाकर्षिदिगन्तराम् ॥ ३६ ॥

मणिदर्पणदर्पघ्नकपोलफलकप्रभाम् ।
प्रसन्नवदनाम्भोजमन्दहसितेक्षणाम् ॥ ३७ ॥

मणिमङ्गलसूत्रेण विलसत्कम्बुकन्धराम् ।
श्रितकल्पलताभूतभुजवल्लीचतुष्टयाम् ॥ ३८ ॥

तप्तकाञ्चनसंनद्धवैडूर्याङ्गदभूषणाम् ।
पद्मरागशिलादर्शकङ्कणाढ्यकराम्बुजाम् ॥ ३९ ॥

रत्नाङ्गुलीयनिवहैर्लसदङ्गुलिपल्लवाम् ।
ताराहारझरीभास्वत्स्तनहाटकभूधराम् ॥ ४० ॥

पाटीरपङ्ककर्पूरकुङ्कुमालंकृतस्तनीम् ।
बिन्दुत्रयाद्यवक्त्राब्जस्तनद्वितयगुह्यकाम् ॥ ४१ ॥

कुचभारनमन्मध्यत्रिवलीललितोदराम् ।
मुक्तामाणिक्यवैडूर्यसंबद्धोदरबन्धनाम् ॥ ४२ ॥

जाह्नवीसरिदावर्तशोभिनाभिविराजिताम् ।
अनर्घरत्नखचितरशनाजघनस्थलाम् ॥ ४३ ॥

सुवृत्तजङ्घोरूकाण्डां गूढगुल्फां गुडालकाम् ।
शिञ्जानमणिमञ्जीरमञ्जुपादाब्जमञ्जुलाम् ॥ ४४ ॥

रत्नग्रैवेयवलयां मकुटाङ्गदकङ्कणाम् ।
कम्बुकण्ठीं सुनासाढ्यां बिम्बोष्ठीमुडुपाननाम् ॥ ४५ ॥

नवयौवनमध्यस्थां साङ्गाभरणसंयुताम् ।
सर्वशृङ्गारवेषाढ्यां सर्वाभरणभूषिताम् ॥ ४६ ॥

चन्दनागरुकर्पूरमृगनाभिसुगन्धिनीम् ।
तनुदीर्घाङ्गुलीभास्वन्नखचन्द्रविराजिताम् ॥ ४७ ॥

कारणेशशिरोरत्ननिघृष्टचरणाम्बुजाम् ।
पञ्चप्रेतासनासीनां पञ्चप्रणवरूपिणीम् ॥ ४८ ॥

सृष्टिस्थित्युपसंहारतिरोधानुग्रहोद्यताम् ।
अष्टत्रिंशत्कलारूपामष्टवाग्देवतावृताम् ॥ ४९ ॥

षोढान्यासमहाभूषां षोडशार्णस्वरूपिणीम् ।
इच्छाज्ञानक्रियानन्दचित्पञ्चकविलासिनीम् ॥ ५० ॥

प्रपञ्चादिजगन्मूर्तिमन्त्रदैवतमातृकाम् ।
सप्तकोटिमहामन्त्ररूपिणीं चित्स्वरूपिणीम् ॥ ५१ ॥

षडध्वसौधशृङ्गाटविहाररसपेशलाम् ।
षड्विधैक्यानुसंधानपरचिद्व्योम्नि संस्थिताम् ॥ ५२ ॥

षडम्बुरुहचक्रान्तस्फुरत्सौदामिनीप्रभाम् ।
षड्वक्त्रगजवक्त्राभ्यां पार्श्वयोरुपसेविताम् ॥ ५३ ॥

अणिमाद्यावृतामाद्यामणिमाद्यष्टसिद्धिदाम् ।
सकृत्प्रणाममात्रेण विरिञ्चादिपदप्रदाम् ॥ ५४ ॥

कल्याणगुणसंपन्नां नतकल्याणदायिनीम् ।
सर्वमङ्गळदां देवीं सर्वमङ्गळविग्रहाम् ॥ ५५ ॥

अनेकजन्मसंसिद्धसुकृताराध्यपादुकाम् ।
सर्वलोकैकजननीं सर्वलोकैकनायिकाम् ॥ ५६ ॥

सचामराभ्यां श्रीवाग्भ्यां पार्श्वयोरुपवीजिताम् ।
मन्त्रिणीदण्डिनीनीतिविधानाकर्णनोत्सुकाम् ॥ ५७ ॥

कलाचीवीटिकाच्छत्रभृङ्गारादर्शपादुकाम् ।
मणिवीणां शुकं शारीं तालवृन्तं कमण्डलुम् ॥ ५८ ॥

पानपात्रं स्वर्णवेत्रं पूर्णस्वर्णघटद्वयम् ।
जयकाहलिकां भेरीं शङ्खदुन्दुभिमर्दलान् ॥ ५९ ॥

मकरध्वजपङ्क्तिं च हंससिंहध्वजावलीम् ।
दिव्यानि धूपपात्राणि तथा सौवर्णदीपिकाम् ॥ ६० ॥

बिभ्रतीभिश्च बालान्नपूर्णातारामिरादरात् ।
गायत्र्या चैव सावित्र्या सिद्धलक्ष्म्यादिशक्तिभिः॥६१॥

वाग्वादिन्या नकुल्या च तुरगारूढयावृताम् ।
कपालशूलधारिण्या शूलिन्या बगलाह्वया ॥ ६२ ॥

सम्पत्कर्या च साम्राज्यलक्ष्म्या च कुरुकुल्लया ।
पद्मावत्या रेणुकया भीमकाल्या च दुर्गया ॥ ६३ ॥

नीलकण्ठ्या महाकाल्या भद्रकाल्या च भद्रया ।
गङ्गाद्याभिः सरिद्भिश्च मातृभिश्च सुसेविताम् ॥ ६४ ॥

महापोढोदिताशेषदेवतागणसेविताम् ।
गणेशग्रहनक्षत्रयोगिनीराशिरूपिणीम् ॥ ६५ ॥

पञ्चाशत्पीठमध्यस्थां पञ्चाशद्वर्णरूपिणीम् ।
मातृकापीठमध्यस्थां मातृकाष्टकवर्गिणीम् ॥ ६६ ॥

नवचक्रात्मिकां देवीं नवचक्राधिदेवताम् ।
नित्यानन्दमयीं नित्यां नित्यापोडशिकान्विताम् ॥६७॥

सर्वपीठमयीमाद्यां पीठत्रितयमध्यगाम् ।
ओड्याणपीठनिलयां गुरुमण्डलनायिकाम् ॥ ६८ ॥

अनन्तयोगिनीवृन्दैरणिमाद्यैर्महोज्ज्वलैः ।
कोटिकोटिप्रभिन्नैश्च कोटिबालार्कसंनिभैः ॥ ६९ ॥

चतुस्समयविद्याभिः षड्विधैर्योगिनीगणैः ।
षड्दर्शनाधिदेवैश्च पञ्चाम्नायाधिदेवतैः ॥ ७० ॥

चतुरायतनोद्भासिगणेशार्कहरीश्वरैः ।
नवावरणदेवीभिर्नवधा योगिनीगणैः ॥ ७१ ॥

सेवितामरुणानेककोटिकोट्यर्कपाटलाम् ।
ब्रह्माणीकोटिसहितब्रह्मकोटिभिरावृताम् ॥ ७२ ॥

अनेककोटिभिश्चैव बालार्कायुतसंनिभैः ।
नामपारायणपरैर्लक्ष्मीनारायणैः स्तुताम् ॥ ७३ ॥

ज्वलन्मन्युभिरत्युग्रैः शतरुद्रीयसंस्तुतैः ।
रुद्राणीकोटिसहितैः रुद्रकोटिभिरर्चिताम् ॥ ७४ ॥

अनेकशरभाघोरवडवानलभैरवैः ।
दुर्गाभिः कालिकाभिश्च महाकाल्या च संवृताम् ॥ ७५ ॥

गणपैर्वीरभद्रैश्च वटुकैः क्षेत्रपालकैः ।
सुकुमारैः कुमारैश्च तथा हरिहरात्मजैः ॥ ७६ ॥

अनेकदशदिक्पालैश्चन्द्रार्कवसुकोटिभिः ।
सनकाद्यैश्च योगीन्द्रैः सप्तर्षीणां च कोटिभिः ॥ ७७ ॥

नारदादिसुरर्षीणां कोटिभिः परिसेविताम् ।
शङ्खपद्मनिधीनां च कोटिभिः परिसेविताम् ॥ ७८ ॥

अप्सरोयक्षगन्धर्वकिन्नराणां च कोटिभिः ।
कोटिभिर्गुह्यकानां च सविद्याधरकोटिभिः ॥ ७९ ॥

भैरवीभैरवाणां च कोटिकोटिभिरावृताम् ।
सुरासुराणां कोटीनां कोटिभिः परिसेविताम् ॥ ८० ॥
सर्वमन्त्रमयीं देवीं सच्चिदानन्दविग्रहाम् ।
इच्छाज्ञानक्रियारूपामिच्छाकलितविग्रहाम् ॥ ८१ ॥
परादिवैखरीरूपां महामायां परात्पराम् ।
महालक्ष्मीं महादेवीं महात्रिपुरसुन्दरीम् ॥ ८२ ॥
जगदाह्लादनकरीं जगत्संकल्पविग्रहाम् ।
जगत्संजीवनोद्युक्तां जगद्रञ्जनकारिणीम् ॥ ८३ ॥
महाकामकलारूपां चतुरासनसंस्थिताम् ।
राजराजेश्वराङ्कस्थां राजराजेश्वरेश्वरीम् ॥ ८४ ॥
एवं ध्यात्वा पराशक्तिं हृदि श्रीचक्ररूपिणीम् ।
पूर्वोक्तन्यासशुद्धात्मा स्वात्माभेदेन भावयेत् ॥ ८५ ॥
अन्तर्यागक्रमेणैव शुद्धिद्रव्यसमन्वितः ।
रक्ताम्बरस्रगालेपरक्तभूषणभूषितः ॥ ८६ ॥
लाक्षारुणगृहे स्थित्वा पूजां कुर्यात्समाहितः ।
आवाहनादिभेदांश्च दश मुद्राः प्रदर्शयेत् ॥ ८७ ॥
यथाशक्ति जपेद्विद्वान् श्रीविद्यां सर्वसिद्धिदाम् ।
सौभाग्यदण्डिनीमुद्रां रिपुजिह्वाग्रहन्त्रिणीम् ॥ ८८ ॥
शाक्तं च तिलकं कुर्वन्मुखवेष्टनमाचरेत् ।
पुनः संपूर्णया चैव गलोर्ध्वं विन्यसेद्बुधः ॥ ८९ ॥

व्यापकान्ते योनिमुद्रां मुखे क्षिप्त्वाभिवादयेत् ।
ब्रह्मरन्ध्रे न्यसेत्पूर्वं मणिबन्धद्वये पुनः ॥ ९० ॥

ललाटेऽनामिकां कृत्वा त्रैलोक्यस्याप्यहं प्रभुः ।
गुरूपदिष्टमार्गेण षोडशार्णं न्यसेत्ततः ॥ ९१ ॥

संहारं च ततः सृष्टिं स्थितिन्यासं समाचरेत् ।
ऋष्यादिकन्यासपूर्वं षडङ्गन्यासमाचरेत् ॥ ९२ ॥

चक्रपूजापरो मन्त्री श्रीचक्रार्चनपूर्वकम् ।
बिन्दुबिन्दुद्वयारूढहार्दबिन्दुस्वरूपकाम् ॥ ९३ ॥

महाकामकलारूपमात्मानं भावयेद्धिया ।
संपूर्णं चिन्तयेद्विद्वान् ब्रह्मरन्ध्रेऽरुणप्रभाम् ॥ ९४ ॥

स्रवत्सुधाषोडशार्णां सर्वसौभाग्यदां स्मरेत् ।
षोडशार्णं महामन्त्रं मन्त्रराजोत्तमोत्तमम् ॥ ९५ ॥

सकृच्छ्रवणमात्रेण कोटिजन्माघनाशनम् ।
महापातककोटीनां भञ्जनं स्मृतिमात्रतः ॥ ९६ ॥

उपपातकदौर्भाग्यशमनं भुक्तिमुक्तिदम् ।
विषरोगादिदारिद्र्यमृत्युसंहारकारकम् ॥ ९७ ॥

सप्तकोटिमहामन्त्रपारायणफलप्रदम् ।
शतरुद्रीयकोटीनां जपयज्ञफलप्रदम् ॥ ९८ ॥

चतुस्समुद्रपर्यन्तभूदानफलदं शिवे ।
सहस्रकोटिगोदानफलदं ध्यानमात्रतः ॥ ९९ ॥

कोट्यश्वमेधफलदं जरामृत्युनिवारणम् ।
किं पुनर्बहुनोक्तेन शिवसायुज्यदायकम् ॥ १०० ॥

घुटिकापादुकासिद्धिखेचरत्वादिदायकम् ।
ब्रह्मविष्णुमहेशाद्यैर्जप्तं यत्पदसिद्धये ॥ १०१ ॥

तत्पदं देशिकाल्लब्ध्वा षोडशार्णं महामनुम् ।
सहस्रं प्रजपेद्विद्वान् त्रिशतं शतमेव वा ॥ १०२ ॥

स जीवन्मुक्त एव स्यात्सर्वसौभाग्यसुन्दरः ।
चतुष्षष्टिकलापूर्णहृदयः सदयोदयः ॥ १०३ ॥

श्रीगुरोः पादुका मूर्ध्नि श्रीचक्रं हृदि देवता ।
श्रीविद्या यस्य जिह्वाग्रे स साक्षात्परमः शिवः ॥१०४॥

सहस्रारसुधाक्लृप्तषडम्भोरुहमण्डलः ।
आचन्द्रतारकस्थायिनिजवंशयशोज्वलः ॥ १०५ ॥

श्रीचक्रदेवीश्रीनाथस्वात्मनामैक्यमामृशन् ।
त्रैलोक्यमरुणं ध्यात्वा श्रीविद्यां यो जपेत्सुधीः ॥१०६॥

स योगी कृतकृत्यश्च चराचरविभुर्भवेत् ।
सृष्टिस्थितिलयादीनां कृत्याकृत्यविभञ्जकः ॥ १०७ ॥

जङ्गमस्थावरोद्भूतविषविद्रावकोविदः ।
दिव्यमङ्गळकल्याणगुणरत्नैरलंकृतः ॥ १०८ ॥

मृतसंजीवको नित्यो महाद्भुतचरित्रभूः ।
सिद्धचारणगन्धर्वयक्षरक्षोरगैः स्तुतः ॥ १०९ ॥

विचरन्सकलाँल्लोकान्निग्रहानुग्रहक्षमः ।
महालक्ष्मीमयो भूत्वा लक्ष्मीवृन्दैश्च सेवितः ॥ ११० ॥
भुञ्जानो बहुलान्भोगान् मूर्तिमानिव मन्मथः ।
सृष्टिस्थित्युपसंहारकर्ता शिव इवापरः ॥ १११ ॥
राजराजेश्वरीरूपो राजराजाभिवन्दितः ।
कुलकोटिं समुद्धृत्य शिवयोरैक्यमाप्नुयात् ॥ ११२ ॥
इदं ध्यानं मया प्रोक्तं श्रीविद्याप्रीतिदायकम् ॥

इति उमामहेश्वरसंवादे राजराजेश्वरीतन्त्रे
दिव्यमङ्गळाध्याबं नाम
अष्टत्रिंशः पटलः ॥

---

## ॥ श्रीमहाशंभुस्तुतिः ॥

देवा ऊचुः—

अद्वयं निर्मलं शान्तं मायातीतमजं महः ।
निरस्तगुणसंसर्गं महाशंभुमुपास्महे ॥ १ ॥

देवानामपि चावेद्यमध्येयं योगिनामपि ।
अनध्येयं च वेदज्ञैर्महाशंभुमुपास्महे ॥ २ ॥

न सन्नासन्न सदसन्न द्वयं नाद्वयं तथा ।
यस्य तेजःप्रकाशं तं महाशंभुमुपास्महे ॥ ३ ॥

स्वयं वेद्यं स्वसंजातं स्वयंप्रभुमनञ्जनम् ।
स्वयमेकान्तनिर्विण्णं महाशंभुमुपास्महे ॥ ४ ॥

वेद्यं वित्तिश्च वेत्ता च त्रिपुटीयं विसृत्वरी ।
स्पृशति क्वापि यन्नैतत्स्वयमेवमुपास्महे ॥ ५ ॥

धर्माधर्मैस्तद्विपाकैः सुखदुःखैश्च यत्पदम् ।
अनाघ्रातं तमीशानं महाशंभुमुपास्महे ॥ ६ ॥

सौराणां भास्कराकारं ब्रह्म च ब्रह्मवादिनाम् ।
सौगतानां च विज्ञानं महाशंभुमुपास्महे ॥ ७ ॥

लोकायतिकमुख्यानां स्वभावमयविग्रहम् ।
क्षणिकानां क्षणाकारं महाशंभुमुपास्महे ॥ ८ ॥

शून्यं माध्यमिकानां च सांख्यानां पुरुषात्मकम् ।
पातञ्जलानां शाब्दं च महाशंभुमुपास्महे ॥ ९ ॥

कारूणां विश्वकर्माणं शैवानां शिवरूपिणम् ।
विष्णुं च पाञ्चरात्राणां महाशंभुमुपास्महे ॥ १० ॥

अर्थेश्वरं निधिविदां कामेशं कामसूत्रिणाम् ।
वैश्वानरं च वैद्यानां महाशंभुमुपास्महे ॥ ११ ॥

दयावतां धर्मदैवमुग्राणां चण्डदैवतम् ।
कर्मठानामुपास्याख्यं महाशंभुमुपास्महे ॥ १२ ॥

विप्राणामग्निनिलयं हृत्स्थं योगवतामपि ।
प्रतिमास्थमबुद्धानां महाशंभुमुपास्महे ॥ १३ ॥

सर्वेषामादिभूतं च स्वयमादिविवर्जितम् ।
सर्वान्तं च स्वतोऽनन्तं महाशंभुमुपास्महे ॥ १४ ॥

त्वं न दृश्योऽसि सर्वेषां न ध्येयोऽसि महेश्वर ।
अस्मज्जीवातुसंसिद्ध्यै चक्षुषां नः पदं भव ॥ १५ ॥

विपरीतसमाचारैर्दुष्टैर्भण्डादिदानवैः ।
बाधिताः स्मो महाशंभो चक्षुषां नः पदं भव ॥ १६ ॥

दुर्बलाः स्मो विभग्नाः स्मो नीरसाः स्मश्च शङ्कर ।
अस्मानुद्धर कारुण्याच्चक्षुषां नः पदं भव ॥ १७ ॥

यदि नो रक्षति भवान् भक्तानस्मान् परार्दितान् ।
तवैव हि यशोहानिश्चक्षुषां नः पदं भव ॥ १८ ॥

इत्येवं विष्णुना धात्रा चेन्द्रेण च कृतस्तुतिः ।
आविर्बभूव भगवान् पराशक्त्या निषेवितः ॥ १९ ॥

कालमेघसमच्छायकण्ठशूलकपालभृत् ।
द्विभुजश्च त्रिणेत्रश्च स्मयमानमुखाम्बुजः ॥ २० ॥

पराशक्तिश्च चन्द्राभा चन्द्रवच्छीतलाकृतिः ।
अक्षस्रक्पुस्तकधरा तैर्देवैरवलोकिता ॥ २१ ॥

सर्वेषां मूलभूतौ तौ दंपती करुणाकरौ ।
परामहाशंभुनाथावदातां दर्शनोत्सवम् ॥ २२ ॥

इति श्रीललितोपाख्याने विंशोऽध्याये
महाशंभुस्तुतिः ॥

———

॥ श्रीः ॥

# ॥ शक्तिमहिम्नःस्तोत्रम् ॥

श्रीदुर्वासा उवाच—

मातस्ते महिमा वक्तुं शिवेनापि न शक्यते ।
भक्त्याहं स्तोतुमिच्छामि प्रसीद मम सर्वदा ॥ १ ॥

श्रीमातस्त्रिपुरे परात्परतरे देवि त्रिलोकीमहा-
सौन्दर्यार्णवमन्थनोद्भवसुधाप्राचुर्यवर्णोज्ज्वलम् ।
उद्यद्भानुसहस्रनूतनजपापुष्पप्रभं ते वपुः
स्वान्ते मे स्फुरतु त्रिकोणनिलयं ज्योतिर्मयं वाङ्मयम् ॥

आदिक्षान्तसमस्तवर्णसुमणिप्रोते वितानप्रभे
ब्रह्मादिप्रतिमाभिकीलितषडाधाराब्जकक्षोन्नते ।
ब्रह्माण्डाब्जमहासने जननि ते मूर्तिं भजे चिन्मयीं
सौषुम्नायतपीतपङ्कजमहामध्यत्रिकोणस्थिताम् ॥ ३ ॥

या बालेन्दुदिवाकराक्षिमधुरा या रक्तपद्मासना
रत्नाकल्पविराजिताङ्गलतिका पूर्णेन्दुवक्त्रोज्ज्वला ।
अक्षस्रक्सृणिपाशपुस्तककरा या बालभानुप्रभा
तां देवीं त्रिपुरां शिवां हृदि भजेऽभीष्टार्थसिद्ध्यै सदा ॥

वन्दे वाग्भवमैन्दवात्मसदृशं वेदादिविद्यागिरो
भाषा देशसमुद्भवाः पशुगताश्छन्दांसि सप्त स्वरान् ।
तालान्पञ्च महाध्वनीन्प्रकटयत्यात्मप्रकाशेन य-
त्तद्बीजं पदवाक्यमानजनकं श्रीमातृके ते परम् ॥ ५ ॥

त्रैलोक्यस्फुटमन्त्रतन्त्रमहिमा स्वात्मोक्तिरूपं विना
यद्बीजं व्यवहारजालमखिलं नास्त्येव मातस्तव ।
तज्जाप्यस्मरणप्रसक्तसुमतिः सर्वज्ञतां प्राप्य कः
शब्दब्रह्मनिवासभूतवदनो नेन्द्रादिभिः स्पर्धते ॥ ६ ॥

मात्रा यात्र विराजतेऽतिविशदा तामष्टधा मातृकां
शक्तिं कुण्डलिनीं चतुर्विधतनुं यस्तत्त्वविन्मन्यते ।
सोऽविद्याखिलजन्मकर्मदुरितारण्यं प्रबोधाग्निना
भस्मीकृत्य विकल्पजालरहितो मातः पदं तद्व्रजेत् ॥ ७ ॥

तत्ते मध्यमबीजमम्ब कलयाम्यादित्यवर्णं क्रिया-
ज्ञानेच्छाद्यमनन्तशक्तिविभवव्यक्तिं व्यनक्ति स्फुटम् ।
उत्पत्तिस्थितिकल्पकल्पिततनु स्वात्मप्रभावेन य-
त्काम्यं ब्रह्महरीश्वरादिविबुधैः कामं क्रियायोजितैः ॥ ८ ॥

कामान्कारणतां गतानगणितान्कार्यैरनन्तैर्मही-
मुख्यैः सर्वमनोगतैरधिगतान्मानैरनेकैः स्फुटम् ।
कामक्रोधसलोभमोहमदमात्सर्यादिषट्कं च यत्
बीजं भ्राजयति प्रणौमि तदहं ते साधु कामेश्वरि ॥ ९ ॥

यद्भक्ताखिलकामपूरणचणस्वात्मप्रभावं महा-
जाड्यध्वान्तविदारणैकतरणिज्योतिः प्रबोधप्रदम् ।
यद्वेदेषु च गीयते श्रुतिमुखं मात्रात्रयेणोमिति
श्रीविद्ये तव सर्वराजवशकृत्तत्कामराजं भजे ॥ १० ॥

यत्ते देवि तृतीयबीजमनलज्वालावलीसंनिभं
सर्वाधारतुरीयशक्तिपरमब्रह्माभिधाशब्दितम् ।
मूर्धन्यान्तविसर्गभूषितमहौकारात्मकं तत्परं
भ्राजद्रूपमनन्यतुल्यमभितः स्वान्ते मम द्योतताम् ॥११॥

सर्वं सर्वत एव सर्गसमये कार्येन्द्रियाण्यन्तरा
तत्तद्दिव्यहृषीककर्मभिरियं संव्यश्नुवाना परा ।
वागर्थव्यवहारकारणतनुः शक्तिर्जगद्रूपिणी
यद्बीजात्मकतां गता तव शिवे तन्नौमि बीजं परम् ॥१२॥

अग्नीन्दुद्युमणिप्रभञ्जनधरानीरान्तरस्थायिनी
शक्तिर्ब्रह्महरीशवासवमुखामर्त्यासुरात्मस्थिता ।
सृष्टस्थावरजङ्गमस्थितमहाचैतन्यरूपा च या
यद्बीजस्मरणेन सैव भवती प्रादुर्भवत्यम्बिके ॥ १३ ॥

स्वात्मश्रीविजिताजविष्णुमघवश्रीपूरणैकव्रतं
सद्विद्याकविताविलासलहरीकल्लोलिनीदीपकम् ।
बीजं यत्त्रिगुणप्रवृत्तिजनकं ब्रह्मेति यद्योगिनः
शान्ताः सत्यमुपासते तदिह ते चित्ते दधे श्रीपरे ॥१४॥

एकैकं तव मातृके परतरं संयोगि वायोगि वा
विद्यादिप्रकटप्रभावजनकं जाड्यान्धकारापहम् ।
यन्निष्ठाश्च महोत्पलासनमहाविष्णुप्रहर्त्रादयो
देवाः स्वेषु विधिष्वनन्तमहिमस्फूर्तिं दधत्येव तत् ॥ १५ ॥

इत्थं त्रीण्यपि मूलवाग्भवमहाश्रीकामराजस्फुर-
च्छक्त्याख्यानि चतुःश्रुतिप्रकटितान्युत्कृष्टकूटानि ते ।
भूतर्तुश्रुतिसंख्यवर्णविदितान्यारक्तकान्ते शिवे
यो जानाति स एव सर्वजगतां सृष्टिस्थितिध्वंसकृत् ॥ १६ ॥

ब्रह्मायोनिरमासुरेश्वरसुहृल्लेखाभिरुक्तैस्तथा
मार्ताण्डेन्दुमनोजहंसवसुधामायाभिरुत्तंसितैः ।
सोमाम्बुक्षितिशक्तिभिः प्रकटितैर्वाणाङ्गवेदैः क्रमा-
द्वर्णैः श्रीशिवदेशिकेन विदितां विद्यां तवाम्बाश्रये ॥ १७ ॥

नित्यं यस्तव मातृकाक्षरसखीं सौभाग्यविद्यां जपे-
त्संपूज्याखिलचक्रराजनिलयां सायंतनाग्निप्रभाम् ।
कामाख्यं शिवनामतत्त्वमुभयं व्याप्यात्मना सर्वतो
दीव्यन्तीमिह तस्य सिद्धिरचिरात्स्यात्त्वत्स्वरूपैकता ॥१८॥

काव्यैर्वा पठितैः किमल्पविदुषां जोघुष्यमाणैः पुनः
किं तैर्व्याकरणैर्विबोबुधिषया किं वाभिधानश्रिया ।
एतैरम्ब न बोभवीति सुकविस्तावत्तव श्रीमतो-
र्यावन्नानुसरीसरीति सरणिं पादाब्जयोः पावनीम् ॥ १९ ॥

गेहं नाकति गर्वितः प्रणतति स्त्रीसंगमो मोक्षति
द्वेषी मित्रति पातकं सुकृतति क्ष्मावल्लभो दासति ।
मृत्युर्वैद्यति दूषणं सुगुणति त्वत्पादसंसेवनात्
त्वां वन्दे भवभीतिभञ्जनकरीं गौरीं गिरीशप्रियाम् ॥ २० ॥

आद्यैरग्निरवीन्दुबिम्बनिलयैरम्ब त्रिलिङ्गात्मभि-
र्मिश्रारक्तसितप्रभैरनुपमैर्युष्मत्पदैस्तैस्त्रिभिः ।
स्वात्मोत्पादितकाललोकनिगमावस्थामरादित्रयै-
रुद्भूतं त्रिपुरेति नाम कलयेद्यस्ते स धन्यो बुधः ॥ २१ ॥

आद्यो जाप्यतमार्थवाचकतया रूढः स्वरः पञ्चमः
सर्वोत्कृष्टतमार्थवाचकतया वर्णः पवर्गान्तकः ।
वक्तृत्वेन महाविभूतिसरणिस्त्वाधारगो हृद्गतो
भ्रूमध्ये स्थित इत्यतः प्रणवता ते गीयतेऽम्बागमैः ॥ २२ ॥

गायत्री सशिरास्तुरीयसहिता सन्ध्यामयीत्यागमै-
राख्याता त्रिपुरे त्वमेव महतां शर्मप्रदा कर्मणाम् ।
तत्तद्दर्शनमुख्यशक्तिरपि च त्वं ब्रह्मकर्मेश्वरी
कर्तार्हन्पुरुषो हरिश्च सविता बुद्धः शिवस्त्वं गुरुः ॥ २३ ॥

अन्नप्राणमनःप्रबोधपरमानन्दैः शिरःपक्षयु-
क्पुच्छात्मप्रकटैर्महोपनिषदां वाग्भिः प्रसिद्धीकृतैः ।
कोशैः पञ्चभिरेभिरम्ब भवतीमेतत्प्रलीनामिति
ज्योतिःप्रज्वलदुज्ज्वलात्मचपलां यो वेद स ब्रह्मवित् ॥२४॥

सच्चित्तत्त्वमसीति वाक्यविदितैरध्यात्मविद्याशिव-
 ब्रह्माख्यैरखिलप्रभावमहितैस्तत्त्वैस्त्रिभिः सद्गुरोः ।
त्वद्रूपस्य मुखारविन्दविवरात्संप्राप्य दीक्षामतो
 यस्त्वां विन्दति तत्त्वतस्तदहमित्यार्ये स मुक्तो भवेत् ॥

सिद्धान्तैर्बहुभिः प्रमाणगदितैरन्यैरविद्यातमो
 नक्षत्रैरिव सर्वमन्धतमसं तावन्न निर्भिद्यते ।
यावत्ते सवितेव संमतमिदं नोदेति विश्वान्तरे
 जन्तोर्जन्मविमोचनैकभिदुरं श्रीशाम्भवं श्रीशिवे ॥२६॥

आत्मासौ सकलेन्द्रियाश्रयमनोबुद्ध्यादिभिः शोचितः
 कर्माबद्धतनुर्जनिं च मरणं प्रैतीति यत्कारणम् ।
तत्ते देवि महाविलासलहरीदिव्यायुधानां जय-
 स्तस्मात्सद्गुरुमभ्युपेत्य कलयेत्त्वामेव चेन्मुच्यते ॥ २७ ॥

नानायोनिसहस्रसंभववशाज्जाता जनन्यः कति
 प्रख्याता जनकाः कियन्त इति मे सेत्स्यन्ति चाग्रे कति ।
एतेषां गणनैव नास्ति महतः संसारसिन्धोर्विधे-
 र्भीतं मां नितरामनन्यशरणं रक्षानुकम्पानिधे ॥ २८ ॥

देहक्षोभकरैर्व्रतैर्बहुविधैर्दानैश्च होमैर्जपैः
 संतानैर्हयमेधमुख्यसुमखैर्नानाविधैः कर्मभिः ।
यत्संकल्पविकल्पजालमलिनं प्राप्यं पदं तस्य ते
 दूरादेव निवर्तते परतरं मातः पदं निर्मलम् ॥ २९ ॥

पञ्चाशन्निजदेहजाक्षरमयैर्नानाविधैर्धातुभि-
र्बह्वर्थैः पदवाक्यमानजनकैरर्थाविनाभावितैः ।
साभिप्रायवदर्थकर्मफलदैः ख्यातैरनन्तैरिदं
विश्वं व्याप्य चिदात्मनाहमहमित्युज्जृम्भसे मातृके ॥३०॥

श्रीचक्रं श्रुतिमूलकोश इति ते संसारचक्रात्मकं
विख्यातं तदधिष्ठिताक्षरशिवज्योतिर्मयं सर्वतः ।
एतन्मन्त्रमयात्मिकाभिररुणं श्रीसुन्दरीभिर्वृतं
मध्ये बैन्दवसिंहपीठललिते त्वं ब्रह्मविद्या शिवे ॥ ३१ ॥

बिन्दुप्राणविसर्गजीवसहितं बिन्दुत्रिबीजात्मकं
षट्कूटानि विपर्ययेण निगदेत्तारत्रिबालाक्षरैः ।
एभिः संपुटितं प्रजप्य विहरेत्प्रासादमन्त्रं परं
गुह्याद्गुह्यतमं सयोगजनितं सद्भोगमोक्षप्रदम् ॥ ३२ ॥

आताम्रार्कसहस्रदीप्तिपरमा सौन्दर्यसारैरलं
लोकातीतमहोदयैरुपयुता सर्वोपमागोचरैः ।
नानानर्घ्यविभूषणैरगणितैर्जाज्वल्यमानाभित-
स्त्वं मातस्त्रिपुरारिसुन्दरि कुरु स्वान्ते निवासं मम ॥३३॥

शिञ्जन्नूपुरपादकङ्कणमहामुद्रासु लाक्षारसा-
लंकाराङ्कितपादपङ्कजयुगं श्रीपादुकालंकृतम् ।
उद्भास्वन्नखचन्द्रखण्डरुचिरं राजज्जपासंनिभं
ब्रह्मादित्रिदशासुरार्चितमहं मूर्ध्नि स्मराम्यम्बिके ॥ ३४ ॥

आरक्तच्छविनातिमार्दवयुजा निश्वासहार्येण य-
त्कौशेयेन विचित्ररत्नघटितैर्मुक्ताफलैरुज्ज्वलैः ।
कूजत्काञ्चनकिङ्किणीभिरभितः संनद्धकाञ्चीगुणै-
रादीप्तं सुनितम्बबिम्बमरुणं ते पूजयाम्यम्बिके ॥ ३५ ॥

कस्तूरीघनसारकुङ्कुमरजोगन्धोत्कटैश्चन्दनै-
रालिप्तं मणिमालयातिरुचिरं ग्रैवेयहारादिभिः ।
दीप्तं दिव्यविभूषणैर्जननि ते ज्योतिर्विभास्वत्कुच-
व्याजस्वर्णघटद्वयं हरिहरब्रह्मादिपीतं भजे ॥ ३६ ॥

मुक्तारत्नसुवर्णकान्तिकलितैस्ते बाहुवल्लीरहं
केयूरोत्तमबाहुदण्डवलयैर्हस्ताङ्गुलीभूषणैः ।
संपृक्ताः कलयामि हीरमणिमन्मुक्ताफलाकीलित-
ग्रीवापट्टविभूषणेन सुभगे कण्ठं च कम्बुश्रियम् ॥३७॥

तप्तस्वर्णकृतोरुकुण्डलयुगं माणिक्यमुक्तोल्लस-
द्धीराबद्धमनन्यतुल्यमपरं हैमं च चक्रद्वयम् ।
शुक्राकारनिकारदक्षमपरं मुक्ताफलं सुन्दरं
बिभ्रत्कर्णयुगं नमामि ललितं नासाग्रभागं शिवे ॥३८॥

उद्यत्पूर्णकलानिधिश्रि वदनं भक्तप्रसन्नं सदा
संफुल्लाम्बुजपत्रचित्रसुषुमाधिक्कारदक्षेक्षणम् ।
सानन्दं कृतमन्दहासमसकृत्प्रादुर्भवत्कौतुकं
कुन्दाकारसुदन्तपङ्क्तिशशिभापूर्णं स्मराम्यम्बिके ॥३९॥

शृङ्गारादिरसालयं त्रिभुवनीमाल्यैरतुल्यैर्वृतं
सर्वाङ्गीणसदङ्गरागसुरभिश्रीमद्वपुर्धूपितम् ।
ताम्बूलारुणपल्लवाधरयुतं रम्यं त्रिपुण्ड्रं दध-
द्भालं नन्दनचन्दनेन जननि ध्यायामि ते मङ्गलम् ॥ ४० ॥

जातीचम्पककुन्दकेसरमहागन्धोद्गिरत्केतकी-
नीपाशोकशिरीषमुख्यकुसुमैः प्रोत्तंसिता धूपिता ।
आनीलाञ्जनतुल्यमत्तमधुपश्रेणीव वेणी तव
श्रीमातः श्रयतां मदीयहृदयाम्भोजं सरोजालये ॥ ४१ ॥

लेखालम्भ्यविचित्ररत्नघटितं हैमं किरीटोत्तमं
मुक्ताकाञ्चनकिङ्किणीगणमहाहीरप्रबद्धोज्ज्वलम् ।
चञ्चच्चन्द्रकलाकलापमहितं देवद्रुपुष्पार्चितै-
र्माल्यैरम्ब विलम्बितं सशिखरं बिभ्रच्छिरस्ते भजे ॥ ४२ ॥

उत्क्षिप्तोच्चसुवर्णदण्डकलितं पूर्णेन्दुबिम्बाकृति-
च्छत्रं मौक्तिकचित्ररत्नखचितं क्षौमांशुकोत्तंसितम् ।
मुक्ताजालविलम्बितं सकलशं नानाप्रसूनार्चितं
चन्द्रोद्दामरचामराणि दधते श्रीदेवि ते स्वश्रियः ॥ ४३ ॥

विद्यामन्त्ररहस्यविन्मुनिगणैः क्लृप्तोपचारार्चनां
वेदादिस्तुतिगीयमानचरितां वेदान्ततत्त्वात्मिकाम् ।
सर्वास्ताः खलु तुर्यतामुपगतास्त्वद्रश्मिदेव्यः परा-
स्त्वां नित्यं समुपासते स्वविभवैः श्रीचक्रनाथे शिवे ॥४४॥

एवं यः स्मरति प्रबुद्धसुमतिः श्रीमत्स्वरूपं परं
वृद्धोऽप्याशु युवा भवत्यनुपमः स्त्रीणामनङ्गायते ।
सोऽष्टैश्वर्यतिरस्कृताखिलसुरश्रीजृम्भणैकालयः
पृथ्वीपालकिरीटकोटिवलभीपुष्पार्चिताङ्घ्रिर्भवेत् ॥४५॥

अथ तव धनुः पुण्ड्रेक्षुत्वात्प्रसिद्धमतिद्युति-
त्रिभुवनवधूमुद्यज्ज्योत्स्नाकलानिधिमण्डलम् ।
सकलजननि स्मारं स्मारं गतः स्मरतां नर-
स्त्रिभुवनवधूमोहाम्भोधेः प्रपूर्णविधुर्भवेत् ॥ ४६ ॥

प्रसूनशरपञ्चकप्रकटजृम्भणागुम्भित-
त्रिलोकमवलोकयत्यमलचेतसा चञ्चलम् ।
अशेषतरुणीजनस्मरविजृम्भणे यः सदा
पटुर्भवति ते शिवे त्रिजगदङ्गनाक्षोभणे ॥ ४७ ॥

पाशं प्रपूरितमहासुमतिप्रकाशो
यो वा तव त्रिपुरसुन्दरि सुन्दरीणाम् ।
आकर्षणेऽखिलवशीकरणे प्रवीणं
चित्ते दधाति स जगत्त्रयवश्यकृत्स्यात् ॥ ४८ ॥

यः स्वान्ते कलयति कोविदस्त्रिलोकी-
स्तम्भारम्भणचणमत्युदारवीर्यम् ।
मातस्ते विजयनिजाङ्कुशं स योपा
देवान्स्तम्भयति च भूभुजोऽन्यसैन्यम् ॥ ४९ ॥

चापध्यानवशाद्भवोद्भवमहामोहं महाजृम्भणं
प्रख्यातं प्रसवेषुचिन्तनवशात्तत्तच्छरव्यं सुधीः ।
पाशध्यानवशात्समस्तजगतां मृत्योर्वशत्वं महा-
दुर्गस्तम्भमहाङ्कुशस्य मननान्मायाममेयां तरेत् ॥ ५० ॥

न्यासं कृत्वा गणेशग्रहभगणमहायोगिनीराशिपीठैः
षड्भिः श्रीमातृकार्णैः सहितबहुकलैरष्टवाग्देवताभिः ।
सश्रीकण्ठादियुग्मैर्विमलनिजतनौ केशवाद्यैश्च तत्त्वैः
षट्त्रिंशद्भिश्च तत्त्वैर्भगवति भवतीं यः स्मरेत्स त्वमेव ॥५१॥

सुरपतिपुरलक्ष्मीजृम्भणातीतलक्ष्मीः
प्रभवति निजगेहे यस्य दैवं त्वमार्ये ।
तव विविधकलानां पात्रभूतस्य तस्य
त्रिभुवनविदिता सा जृम्भते कीर्तिरच्छा ॥ ५२ ॥

मातस्त्वं भूर्भुवःस्वर्महरसि नृतपःसत्यलोकैश्च सूर्ये-
न्द्वारज्ञाचार्यशुक्रार्किभिरपि निगमब्रह्मभिः प्रोतशक्तिः ।
प्राणायामादियत्नैः कलयसि सकलं मानसं ध्यानयोगं
येषां तेषां सपर्या भवति सुरकृता ब्रह्मते ज्ञानते च ॥५३॥

क्व मे बुद्धिर्वाचा परमविदुषो मन्दसरणिः
क्व ते मातर्ब्रह्मप्रमुखविदुषामाप्तवचसाम् ।
अभून्मे विस्फूर्तिः परतरमहिम्नस्तव नुतिः
प्रसिद्धं क्षन्तव्यं बहुलतरचापल्यमिह मे ॥ ५४ ॥

दुर्वाससा महितदिव्यमुनीश्वरेण
विद्याकलायुवतिमन्मथमूर्तिनैतत् ।
स्तोत्रं व्यधायि रुचिरं त्रिपुराम्बिकायाः
वेदागमैकपटलीविदितैकमूर्तेः ॥ ६० ॥

शब्दशब्दसुगतनिगमग्रहीतमुनिनिग्रहो भगवान् ।
सर्वासामुपनिषदां दुर्वासा जयति देशिकः प्रथमः ॥ ६१ ॥

इति श्रीदुर्वाससा मुनीन्द्रेण विरचितं
शक्तिमहिम्नःस्तोत्रं संपूर्णम् ॥

॥ श्रीः ॥

# ॥ सुभगोदयस्तुतिः ॥

भवानि त्वां वन्दे भवमहिषि सच्चित्सुखवपुः-
पराकारां देवीममृतलहरीमैन्दवकलाम् ।
महाकालातीतां [1]कलितसरणीकल्पिततनुं
सुधासिन्धोरन्तर्वसतिमनिशं वासरमयीम् ॥ १ ॥

मनस्तत्त्वं जित्वा नयनमथ नासाग्रघटितं
[2]पुनर्व्यावृत्ताक्षः स्वयमपि यदा पश्यति पराम् ।
तदानीमेवास्य स्फुरति बहिरन्तर्भगवती
परानन्दाकारा परशिवपरा काचिदपरा ॥ २ ॥

मनोमार्गं जित्वा मरुत इह नाडीगणजुषो
निरुध्यार्कं सेन्दुं दहनमपि संज्वाल्य शिखया ।
सुषुम्णां संयोज्य श्लथयति च षड्ग्रन्थि शशिनं
तवाज्ञाचक्रस्थं [3]विलयति महायोगिसमयी ॥ ३ ॥

यदा तौ चन्द्रार्कौ निजसदनसंरोधनवशा-
[4]दशक्तौ पीयूषस्रवणहरणे सा च भुजगी ।

---

१. कलितसरणिं कल्पिततनुं २. पुनर्व्यावृत्ताक्षिद्वयमपि

३. श्लथयति, विलसति ४. दशक्ता

प्रबुद्धा क्षुत्क्रुद्धा दशति शशिनं बैन्दवगतं
सुधाधारासारैः स्नपयसि तनुं बैन्दवकले ॥ ४ ॥

पृथिव्यापस्तेजः पवनगगने तत्प्रकृतयः
स्थितास्तन्मात्रास्ता[1] विषयदशकं मानसमिति ।
ततो माया विद्या तदनु च महेशः शिव इतः
परं तत्त्वातीतं मिलितवपुरिन्दोः परकला ॥ ५ ॥

कुमारी यन्मन्द्रं ध्वनति च ततो योषिदपरा
कुलं त्यक्त्वा [2]रौति स्फुटति च महाकालभुजगी ।
ततः पातिव्रत्यं भजति दहराकाशकमले
सुखासीना योषा भवसि भवसीत्काररसिका ॥ ६ ॥

त्रिकोणं ते कौलाः कुलगृहमिति प्राहुरपरे
चतुष्कोणं प्राहुः समयिन इमे बैन्दवमिति ।
सुधासिन्धौ तस्मिन्सुरमणिगृहे सूर्यशशिनो-
रगम्ये रश्मीनां समयसहिते त्वं विहरसे ॥ ७ ॥

त्रिखण्डं ते चक्रं शुचिरविशशाङ्कात्मकतया
मयूखैः षट्त्रिंशद्दशयुततया खण्डकलितैः ।
पृथिव्यादौ तत्त्वे पृथगुदितवद्भिः परिवृतं
भवेन्मूलाधारात्प्रभृति तव षट्चक्रसदनम् ॥ ८ ॥

---

१. स्थितास्तन्मात्राप्ता २. क्वचित्

शतं चाष्टौ वह्नेः शतमपि कलाः षोडश रवेः
शतं षट् च त्रिंशत्सितमयमयूखाश्चरणजाः ।
य एते षष्टिश्च त्रिशतमभवंस्त्वच्चरणजा
महाकौलैस्तस्मान्न हि तव शिवे कालकलना ॥ ९ ॥

त्रिकोणं चाधारं त्रिपुरतनु तेऽष्टारमनघे
भवेत्स्वाधिष्ठानं पुनरपि दशारं मणिपुरम् ।
दशारं ते संवित्कमलमथ मन्वश्रकुसुमे
विशुद्धं स्यादाज्ञा शिव इति ततो बैन्दवगृहम् ॥ १० ॥

त्रिकोणे ते वृत्तत्रितयमिभकोणे वसुदलं
कलाश्रं मिश्रारे भवति भुवनाश्रे च भुवनम् ।
चतुश्चक्रं शैवं निवसति भगे शाक्तिकुसुमे
प्रधानैक्यं षोढा भवति च तयोः शक्तिशिवयोः ॥११॥

कलायां बिन्द्वैक्यं तदनु च तयोर्नादविभवे
तयोर्नादेनैक्यं तदनु च कलायामपि तयोः ।
तयोर्बिन्दावैक्यं त्रितयविभवैक्यं परशिवे
तदेवं षोढैक्यं भवति हि सपर्या समयिनाम् ॥ १२ ॥

कला नादो बिन्दुः क्रमश इह वर्णाश्च चरणं
षडब्जं चाधारप्रभृतिकममीषां च मिलनम् ।
तदेवं षोढैक्यं भवति खलु येषां समयिनां
चतुर्धैक्यं तेषां भवति हि सपर्या समयिनाम् ॥ १३ ॥

तटिल्लेखामध्ये स्फुरति मणिपूरे भगवती
चतुर्धैक्यं तेषां भवति च चतुर्बाहुरुदिता ।
धनुर्बाणानिक्षूद्भवकुसुमजानङ्कुशवरं
तथा पाशं बिभ्रत्युदितरविबिम्बाकृतिरुचिः ॥ १४ ॥

भवत्यैक्यं षोढा भवति भगवत्याः समयिनां
मरुत्वत्कोदण्डद्युतिनियुतभासा समरुचिः ।
भवत्पाणित्रातो दशविध इतीदं मणिपुरे
भवानि प्रत्यक्षं तव वपुरुपास्ते न हि परम् ॥ १५ ॥

इत्यैक्यनिरूपणम् ॥

भवानि श्रीहस्तैर्वहसि फणिपाशं सृणिमथो
धनुः पौण्ड्रं पौष्पं शरमथ जपस्रक्शुकवरौ ।
अथ द्वाभ्यां मुद्रामभयवरदानैकरसिकां
क्वणद्वीणां द्वाभ्यामुरसि च कराभ्यां च बिभृषे ॥ १६ ॥

त्रिकोणैरष्टारं त्रिभिरपि दशारं समुदभू-
द्दशारं भूगेहादपि च भुवनाश्रं समभवत् ।
ततोऽभून्नागारं नृपतिदलमस्मात्रिवलयं
चतुर्द्वाःप्राकारत्रितयमिदमेवाम्ब शरणम् ॥ १७ ॥

चतुःषष्टिस्तन्त्राण्यपि कुलमतं निन्दितमभू-
द्यदेतन्मिश्राख्यं मतमपि भवेन्निन्दितमिह ।
शुभाख्याः पञ्चैताः श्रुतिसरणिसिद्धाः प्रकृतयो
महाविद्यास्तासां भवति परमार्थो भगवती ॥ १८ ॥

स्मरो मारो मारः स्मर इति परो मारमदन-
स्मरानङ्गाश्चेति स्मरमदनमाराः स्मर इति ।
त्रिखण्डः खण्डान्ते कलितभुवनेश्यक्षरयुत-
श्चतुःपञ्चार्णास्ते त्रय इति च पञ्चाक्षरमनुः ॥ १९ ॥
त्रिखण्डे त्वन्मन्त्रे शशिसवितृवह्न्यात्मकतया
स्वराश्चन्द्रे लीनाः सवितरि कलाः कादय इह ।
यकाराद्या वह्नावथ कपयुगं बैन्दवगृहे
निलीनं सादाख्ये शिवयुवति नित्यैन्दवकले ॥ २० ॥
ककाराकाराभ्यां स्वरगणमवष्टभ्य निखिलं
कलाप्रत्याहारात्सकलमभवद्व्यञ्जनगणः ।
त्रिखण्डे स्यात्प्रत्याहरणमिदमन्वक्षपयुगं
क्षकारश्चाकारोऽक्षरतनुतया चाक्षरमिति ॥ २१ ॥
[1]विदेहेन्द्रापत्यं श्रुत इह ऋषिर्यस्य च मनो-
रयं चार्थः सम्यक्श्रुतिशिरसि तैत्तिर्यकऋचि ।
ऋषिं हित्वा चास्या हृदयकमले नैतमृषिमि-
त्यृचाभ्युक्तः पूजाविधिरिह भवत्याः समयिनाम् ॥२२॥
त्रिखण्डस्त्वन्मन्त्रस्तव च सरघायां निविशते
श्रियो देव्याः शेषो यत इह समस्ताः शशिकलाः ।
त्रिखण्डे त्रैखण्ड्यं निवसति समन्त्रे च सुभगे
षडब्जारण्यानी त्रितययुतखण्डे निवसति ॥ २३ ॥

---

१. विदेहो नैर्ऋत्याः सुत इह ऋषिर्यः स च.

त्रयं चैतत्स्वान्ते परमशिवपर्यङ्कनिलये
परे सादाख्येऽस्मिन्निवसति चतुर्थैक्यकलनात् ।
स्वरास्ते लीनास्ते भगवति कलाश्रे च सकलाः
ककाराद्या वृत्ते तदनु चतुरश्रे च यमुखाः ॥ २४ ॥

हलो बिन्दुर्वर्गाष्टकमिभदलं शांभववपु-
श्चतुश्चक्रं शक्तौ स्थितमनुभयं शक्तिशिवयोः ।
निशाद्या दर्शाद्याः श्रुतिनिगदिताः पञ्चदशधा
भवेयुर्नित्यास्तास्तव जननि मन्त्राक्षरगणाः ॥ २५ ॥

इमास्ताः षोडश्यास्तव च सरघायां शशिकला-
स्वरूपायां लीना निवसति तव श्रीशशिकला ।
अयं प्रत्याहारः श्रुत इह कलाव्यञ्जनगणः
ककारेणाकारः स्वरगणमशेषं कथयति ॥ २६ ॥

क्षकारः पञ्चाशत्कल इति हलो बैन्दवगृहं
ककारादूर्ध्वं स्याज्जननि तव नामाक्षरमिति ।
भवेत्पूजाकाले मणिखचितभूषाभिरभितः
प्रभाभिर्व्यालीढं भवति मणिपूरं सरसिजम् ॥ २७ ॥

वदन्त्येके वृद्धा मणिरिति जलं तेन निबिडं
परे तु त्वद्रूपं मणिधनुरितीदं समयिनः ।
अनाहत्या नादः प्रभवति सुषुम्णाध्वजनित-
स्तदा वायोस्तत्र प्रभव इदमाहुः समयिनः ॥ २८ ॥

तदेतत्ते संवित्कमलमिति संज्ञान्तरमुमे
भवेत्संवित्पूजा भवति कमलेऽस्मिन्समयिनाम् ।
विशुद्ध्याख्ये चक्रे वियदुदितमाहुः समयिनः
सदापूर्वो देवः शिव इति हिमानीसमतनुः ॥ २९ ॥

त्वदीयैरुद्योतैर्भवति च विशुद्ध्याख्यसदनं
भवेत्पूजा देव्या हिमकरकलाभिः समयिनाम् ।
सहस्रारे चक्रे निवसति कलापञ्चदशकं
तदेतन्नित्याख्यं भ्रमति सितपक्षे समयिनाम् ॥ ३० ॥

अतः शुक्ले पक्षे प्रतिदिनमिह त्वां भगवतीं
निशायां सेवन्ते निशि चरमभागे समयिनः ।
शुचिः स्वाधिष्ठाने रविरुपरि संवित्सरसिजे
शशी चाज्ञाचक्रे हरिहरविधिग्रन्थय इमे ॥ ३१ ॥

कलायाः षोडश्याः प्रतिफलितबिम्बेन सहितं
तदीयैः पीयूषैः पुनरधिकमाप्लावितत्तनुः ।
सिते पक्षे सर्वास्तिथय इह कृष्णेऽपि च समा
यदा चामावास्या भवति न हि पूजा समयिनाम् ॥३२॥

इडायां पिङ्गल्यां चरत इह तौ सूर्यशशिनौ
तमस्याधारे तौ यदि तु मिलितौ सा तिथिरमा ।
तदाज्ञाचक्रस्थं शिशिरकरबिम्बे रविनिभं
दृढव्यालीढं सद्विगलितसुधासारविसरम् ॥ ३३ ॥

महाव्योमस्थेन्दोरमृतलहरीप्लावितततनुः
प्रशुष्यद्वै नाडीप्रकरमनिशं प्लावयति तत् ।
यदाज्ञायां विद्युन्नियुतनियुताभाक्षरमयी
स्थिता विद्युल्लेखा भगवति विधिग्रन्थिमभिनत् ॥ ३४ ॥

ततो गत्वा ज्योत्स्नामयसमयलोकं समयिनां
पराख्या सादाख्या जयति शिवतत्त्वेन मिलिता ।
सहस्रारे पद्मे शिशिरमहसां बिम्बमपरं
तदेव श्रीचक्रं सरघमिति तद्वैन्दवमिति ॥ ३५ ॥

वदन्त्येके सन्तः परशिवपदे तत्त्वमिलिते
ततस्त्वं षड्विंशी (त्रिंशा) भवसि शिवयोर्मेलनवपुः ।
त्रिखण्डेऽस्मिन्स्वान्ते परमपदपर्यङ्कसदने
परे सादाख्येऽस्मिन्निवसति चतुर्धैक्यकलनात् ॥ ३६ ॥

क्षितौ वह्निर्वह्नौ वसुदलजले दिङ्मरुति दि-
कलाश्रे मन्वश्रं दृशि वसुरथो राजकमले ।
प्रतिद्वैतग्रन्थिस्तदुपरि चतुर्द्वारसहितं
महीचक्रं चैकं भवति भगकोणैक्यकलनात् ॥ ३७ ॥

इति मन्त्रचक्रैक्यम् ।

षडब्जारण्ये त्वां समयिन इमे पञ्चकसमां
यदा संविद्रूपां विदधति च षोढैक्यकलिताम् ।
मनो जित्वा चाज्ञासरसिज इह प्रादुरभव-
त्तटिल्लेखा नित्या भगवति तवाधारसदनात् ॥ ३८ ॥

भवत्साम्यं केचित्त्रितयमिति कौलप्रभृतयः
  परं तत्त्वाख्यं चेत्यपरमिदमाहुः समयिनः ।
क्रियावस्थारूपं प्रकृतिरभिधापञ्चकसमं
  तदेषां साम्यं स्यादवनिषु च यो वेत्ति स मुनिः ॥३९॥

इत्यैक्यनिरूपणम् ।

वशिन्याद्या अष्टावकचटतपाद्याः प्रकृतयः
  स्ववर्गस्थाः स्वस्वायुधकलितहस्ताः स्वविषयाः ।
यथावर्गं वर्णप्रचुरतनवो याभिरभवं-
  स्तव प्रस्तारास्ते त्रय इति जगुस्ते समयिनः ॥ ४० ॥
इमा नित्या वर्णास्तव चरणसंमेलनवशा-
  न्महामेरुस्थाः स्युर्मनुमिलनकैलासवपुषः ।
वशिन्याद्या एता अपि तव सबिन्द्वात्मकतया
  महीप्रस्तारोऽयं क्रम इति रहस्यं समयिनाम् ॥ ४१ ॥

इति प्रस्तारत्रयनिरूपणम् ।

भवेन्मूलाधारं तदुपरितनं चक्रमपि त-
  द्द्वयं तामिस्राख्यं शिखिकिरणसंमेलनवशात् ।
तदेतत्कौलानां प्रतिदिनमनुष्ठेयमुदितं
  भवत्या वामाख्यं मतमपि परित्याज्यमुभयम् ॥ ४२ ॥
अमीषां कौलानां भगवति भवेत्पूजनविधि-
  स्तव स्वाधिष्ठाने तदनु च भवेन्मूलसदने ।
अतो बाह्या पूजा भवति भगरूपेण च ततो
  निषिद्धाचारोऽयं निगमविरहोऽनिन्द्यचरिते ॥ ४३ ॥

नवव्यूहं कौलप्रभृतिकमतं तेन स विभु-
नवात्मा देवोऽयं जगदुदकृपद्भैरववपुः ।
नवात्मा वामादिप्रभृतिभिरिदं भैरववपु-
र्महादेवी ताभ्यां जनकजननीमज्जगदिदम् ॥ ४४ ॥

भवेदेतच्चक्रद्वितयमतिदूरं समयिनां
विसृज्यैतद्युग्मं तदनु मणिपूराख्यसदने ।
त्वया सृष्टैर्वारिप्रतिफलितसूर्येन्दुकिरणै-
र्द्विधा लोके पूजां विदधति भवत्याः समयिनः ॥ ४५ ॥

अधिष्ठानाधारद्वितयमिदमेवं दशदलं
सहस्राराज्जातं मणिपुरमतोऽभूद्दशदलम् ।
हृदम्भोजान्मूलान्नृपदलमभूत्स्वान्तकमलं
तदेवैको बिन्दुर्भवति जगदुत्पत्तिकृदयम् ॥ ४६ ॥

सहस्रारं बिन्दुर्भवति च ततो बैन्दवगृहं
तदेतस्माज्जातं जगदिदमशेषं सकरणम् ।
ततो मूलाधाराद्द्वितयमभवत्तद्दशदलं
सहस्राराज्जातं तदिति दशधा बिन्दुरभवत् ॥ ४७ ॥

तदेतद्बिन्दोर्यद्दशकमभवत्तत्प्रकृतिकं
दशारं सूर्यारं नृपदलमभूत्स्वान्तकमलम् ।
रहस्यं कौलानां द्वितयमभवन्मूलसदनं
तथाधिष्ठानं च प्रकृतिमिह सेवन्त इह ते ॥ ४८ ॥

अतस्ते कौलास्ते भगवति दृढप्राकृतजना
इति प्राहुः प्राज्ञाः कुलसमयमार्गद्वयविदः ।
महान्तः सेवन्ते सकलजननीं बैन्दवगृहे
शिवाकारां नित्याममृतझरिकामैन्दवकलाम् ॥ ४९ ॥

इदं [1]कालोत्पत्तिस्थितिलयकरं पद्मनिकरं
त्रिखण्डं श्रीचक्रं मनुरपि च तेषां च मिलनम् ।
तदैक्यं षोढा वा भवति च चतुर्धेति च तथा
तयोः साम्यं पञ्चप्रकृतिकमिदं शास्त्रमुदितम् ॥५०॥

उपास्तेरेतस्याः फलमपि च सर्वाधिकमभू-
त्तदेतत्कौलानां फलमिह हि चैतत्समयिनाम् ।
सहस्रारे पद्मे [2]सुभगसुभगोदेति सुभगे
परं सौभाग्यं यत्तदिह तव सायुज्यपदवी ॥ ५१ ॥

[3]अतोऽस्याः संसिद्धौ सुभगसुभगाख्या गुरुकृपा-
कटाक्षव्यासङ्गात्स्रवदमृतनिष्यन्दसुलभा ।
तया विद्धो योगी विचरति निशायामपि दिवा
[4]दिवा भानू रात्रौ विधुरिव [5]कृतार्थीकृतमतिः ॥ ५२ ॥

इति श्रीगौडपादाचार्यविरचिता
सुभगोदयस्तुतिः संपूर्णा ॥

---

१. कौलोत्पत्ति २. सुभगसुभगोक्तेति सुभगं ३. अतस्ते संसिद्धा
४. दिवा वा रात्रौ वा ५. कृतार्थीकृत इति.

॥ श्रीः ॥

# ॥ ललितास्तवराजः ॥

जय देवि जगन्मातर्जय देवि परात्परे ।
जय कल्याणनिलये जय कामकलात्मिके ॥ १ ॥

जय कामेशवामाक्षि जय कामाक्षि सुन्दरि ।
जयाखिलसुराराध्ये जय कामेशि कामदे ॥ २ ॥

जय ब्रह्ममये देवि ब्रह्मानन्दरसात्मिके ।
जय नारायणि परे नन्दिताशेषविष्टपे ॥ ३ ॥

जय श्रीकण्ठदयिते जय श्रीललिताम्बिके ।
जय श्रीविजये देवि विजय श्रीसमृद्धिदे ॥ ४ ॥

जातस्य जायमानस्य चेष्टापूर्तस्य हेतवे ।
नमस्तस्यै त्रिजगतां पालयित्र्यै नमो नमः ॥ ५ ॥

कलामुहूर्तकाष्ठाहर्मासंवत्सरात्मने ।
नमः सहस्रशीर्षायै सहस्रमुखलोचने ॥ ६ ॥

नमः सहस्रहस्ताब्जपादपङ्कजशोभिते ।
अणोरणुतरे देवि महतोऽपि महीयसि ॥ ७ ॥

परात्परतरे मातस्तेजस्त्वं तेजसामपि ।
अतलं तु भवेत्पादौ वितलं जानुनी तव ॥ ८ ॥

रसातलं कटीदेशः कुक्षिस्ते धरणी भवेत् ।
हृदयं तु भुवर्लोकः स्वस्ते मुखमुदाहृतम् ॥ ९ ॥

दृशश्चन्द्रार्कदहना दिशस्ते बाहवोऽम्बिके ।
मरुतस्ते तनूच्छ्वासा वाचस्ते श्रुतयोऽखिलाः ॥ १० ॥

क्रीडा ते लोकरचना सखा ते चिन्मयः शिवः ।
आहारस्ते सदानन्दो वासस्ते हृदयं सताम् ॥ ११ ॥

दृश्यादृश्यस्वरूपाणि रूपाणि भुवनानि ते ।
शिरोरुहा नभस्ते तु तारकाः कुसुमानि ते ॥ १२ ॥

धर्माद्या बाहवस्ते स्युरधर्माद्यायुधानि ते ।
यमाश्च नियमाश्चैव करपादरुहास्तथा ॥ १३ ॥

स्तनौ स्वाहास्वधाकारौ लोकोज्जीवनकारकौ ।
प्राणायामास्तु ते नासा रसना ते सरस्वती ॥ १४ ॥

प्रत्याहारस्त्विन्द्रियाणि ध्यानं ते धीस्तुडासनम् ।
मनस्ते धारणाशक्तिर्हृदयं ते समाधिका ॥ १५ ॥

महीरुहास्तेऽङ्गरुहाः प्रभातं वसनं तव ।
भूतं भव्यं भविष्यच्च नित्यं च तव विग्रहम् ॥ १६ ॥

यज्ञरूपा जगद्धात्री विष्वग्रूपा च पावनी ।
आधारं त्वां प्रपश्यन्ति न सम्यङ्निखिलाः प्रजाः ॥१७॥

हृदयस्थापि लोकानामदृश्या मोहनात्मिका ।
नामरूपविभागं च या करोति स्वलीलया ॥ १८ ॥

तान्यधिष्ठाय तिष्ठन्ती तेष्वसक्ता च कामदा ।
नमस्तस्यै महादेव्यै सर्वशक्त्यै नमो नमः ॥ १९ ॥

या देवी परमाशक्तिः परब्रह्माभिधायिनी ।
ब्रह्मानन्दाभिधानायै तस्यै देव्यै नमो नमः ॥ २० ॥

यदाज्ञया प्रवर्तन्ते वह्निसूर्येन्दुमारुताः ।
पृथिव्यादीनि भूतानि तस्यै देव्यै नमो नमः ॥ २१ ॥

या ससर्ज विधातारं सर्गादावादिभूरियम् ।
दधार स्वयमेवैका तस्यै देव्यै नमो नमः ॥ २२ ॥

यया धृता तु धरणी ययाकाशाद्यमेयया ।
यस्यामुदेति सविता तस्यै देव्यै नमो नमः ॥ २३ ॥

यदन्तरस्थं त्रिदिवं यदाधारोऽन्तरिक्षकः ।
यन्मयश्चाखिलो लोकस्तस्यै देव्यै नमो नमः ॥ २४ ॥

यत्रोदेति जगत्कृत्स्नं यत्र तिष्ठति निर्भरम् ।
यत्रान्तमेति काले तु तस्यै देव्यै नमो नमः ॥ २५ ॥

नमो नमस्ते रजसो भवायै
नमो नमः सात्विकसंस्थितायै ।
नमो नमस्ते तमसो हरायै
नमो नमो निर्गुणतः शिवायै ॥ २६ ॥

नमो नमस्ते जगदेकमात्रे
नमो नमस्ते जगदेकपित्रे ।

नमो नमस्तेऽखिलतन्त्ररूपे
नमो नमस्तेऽखिलयज्ञरूपे ॥ २७ ॥
नमो नमो लोकगुरुप्रधाने
नमो नमस्तेऽखिलवाग्विभूत्यै ।
नमोऽस्तु लक्ष्म्यै जगदेकतुष्ट्यै
नमो नमः शांभवि सर्वशक्त्यै ॥ २८ ॥
अनादिमध्यान्तमपाञ्चभौतिकं
ह्यवाङ्मनोगम्यमतर्क्यवैभवम् ।
अरूपमद्वन्द्वमदृष्टिगोचरं
प्रभावमग्र्यं कथमम्ब वर्ण्यते ॥ २९ ॥
प्रसीद विश्वेश्वरि विश्ववन्दिते
प्रसीद विश्वेश्वरि वेदरूपिणि ।
प्रसीद मायामयि मन्त्रविग्रहे
प्रसीद सर्वेश्वरि सर्वरूपिणि ॥ ३० ॥

इति स्तुत्वा महादेवीं देवाः सर्वे सवासवाः ।
भूयो भूयो नमस्कृत्य शरणं जग्मुरञ्जसा ॥ ३१ ॥
ततः प्रसन्ना सा देवी प्रणतं वीक्ष्य वासवम् ।
वरेण च्छन्दयामास वरदाखिलदेहिनाम् ॥ ३२ ॥

इति श्रीललितोपाख्याने अष्टमेऽध्याये
ललितास्तवराजः संपूर्णः ॥

———

॥ श्रीः ॥

# ॥ मन्त्रमातृकापुष्पमाला ॥

कल्लोलोल्लसितामृताब्धिलहरीमध्ये विराजन्मणि-
द्वीपे कल्पकवाटिकापरिवृते कादम्बवाट्युज्ज्वले ।
रत्नस्तम्भसहस्रनिर्मितसभामध्ये विमानोत्तमे
चिन्तारत्नविनिर्मितं जननि ते सिंहासनं भावये ॥ १ ॥

एणाङ्कानलभानुमण्डललसच्छ्रीचक्रमध्ये स्थितां
बालार्कद्युतिभासुरां करतलैः पाशाङ्कुशौ बिभ्रतीम् ।
चापं बाणमपि प्रसन्नवदनां कौसुम्भवस्त्रान्वितां
तां त्वां चन्द्रकलावतंसमकुटां चारुस्मितां भावये ॥ २ ॥

ईशानादिपदं शिवैकफलकं रत्नासनं ते शुभं
पाद्यं कुङ्कुमचन्दनादिभरितैरर्घ्यं सरत्नाक्षतैः ।
शुद्धैराचमनीयकं तव जलैर्भक्त्या मया कल्पितं
कारुण्यामृतवारिधे तदखिलं संतुष्टये कल्पताम् ॥ ३ ॥

लक्ष्ये योगिजनस्य रक्षितजगज्जाले विशालेक्षणे
प्रालेयाम्बुपटीरकुङ्कुमलसत्कर्पूरमिश्रोदकैः ।
गोक्षीरैरपि नारिकेळसलिलैः शुद्धोदकैर्मन्त्रितैः
स्नानं देवि धिया मयैतदखिलं संतुष्टये कल्पताम् ॥ ४ ॥

ह्रींकाराङ्कितमन्त्रलक्षिततनो हेमाचलात्संचितै
रत्नैरुज्ज्वलमुत्तरीयसहितं कौसुम्भवर्णांशुकम् ।
मुक्तासंततियज्ञसूत्रममलं सौवर्णतन्तूद्भवं
दत्तं देवि धिया मयैतदखिलं संतुष्टये कल्पताम् ॥ ५ ॥

हंसैरप्यतिलोभनीयगमने हारावलीमुज्ज्वलां
हिन्दोळद्युतिहीरपूरिततरे हेमाङ्गदे कङ्कणे ।
मञ्जीरौ मणिकुण्डले मकुटमप्यर्धेन्दुचूडामणिं
नासामौक्तिकमङ्गुलीयकटकौ काञ्चीमपि स्वीकुरु ॥ ६ ॥

सर्वाङ्गे घनसारकुङ्कुमघनश्रीगन्धपङ्काङ्कितं
कस्तूरीतिलकं च फालफलके गोरोचनापत्रकम् ।
गण्डादर्शनमण्डले नयनयोर्दिव्याञ्जनं तेऽञ्चितं
कण्ठाब्जे मृगनाभिपङ्कममलं त्वत्प्रीतये कल्पताम् ॥ ७ ॥

कल्हारोत्पलमल्लिकामरुवकैः सौवर्णपङ्केरुहै-
र्जातीचम्पकमालतीवकुळकैर्मन्दारकुन्दादिभिः ।
केतक्या करवीरकैर्बहुविधैः क्लृप्ताः स्रजो मालिकाः
संकल्पेन समर्पयामि वरदे संतुष्टये गृह्यताम् ॥ ८ ॥

हन्तारं मदनस्य नन्दयसि यैरङ्गैरनङ्गोज्ज्वलै-
र्यैर्भृङ्गावलिनीलकुन्तलभरैर्बध्नासि तस्याशयम् ।
तानीमानि तवाम्ब कोमलतराण्यामोदलीलागृहा-
ण्यामोदाय दशाङ्गगुग्गुलुघृतैर्धूपैरहं धूपये ॥ ९ ॥

लक्ष्मीमुज्ज्वलयामि रत्ननिवहोद्भास्वत्तरे मन्दिरे
मालारूपविलम्बितैर्मणिमयस्तम्भेषु संभावितैः ।
चित्रैर्हाटकपुत्रिकाकरधृतैर्गव्यैर्घृतैर्वर्धितै-
र्दिव्यैर्दीपगणैर्धिया गिरिसुते संतुष्टये कल्पताम् ॥१०॥

ह्रींकारेश्वरि तप्तहाटककृतैः स्थालीसहस्रैर्भृतं
दिव्यान्नं घृतसूपशाकभरितं चित्रान्नभेदं तथा ।
दुग्धान्नं मधुशर्करादधियुतं माणिक्यपात्रे स्थितं
माषापूपसहस्रमम्ब सफलं नैवेद्यमावेदये ॥ ११ ॥

सच्छायैर्वरकेतकीदलरुचा ताम्बूलवल्लीदलैः
पूगैर्भूरिगुणैः सुगन्धिमधुरैः कर्पूरखण्डोज्ज्वलैः ।
मुक्ताचूर्णविराजितैर्बहुविधैर्वक्त्राम्बुजामोदनैः
पूर्णा रत्नकलाचिका तव मुदे न्यस्ता पुरस्तादुमे ॥१२॥

कन्याभिः कमनीयकान्तिभिरलंकारामलारार्तिका
पात्रे मौक्तिकचित्रपङ्क्तिविलसत्कर्पूरदीपालिभिः ।
तत्तत्तालमृदङ्गगीतसहितं नृत्यत्पदाम्भोरुहं
मन्त्राराधनपूर्वकं सुविहितं नीराजनं गृह्यताम् ॥ १३ ॥

लक्ष्मीर्मौक्तिकलक्षकल्पितसितच्छत्रं तु धत्ते रसा-
दिन्द्राणी च रतिश्च चामरवरे धत्ते स्वयं भारती ।
वीणामेणविलोचनाः सुमनसां नृत्यन्ति तद्रागव-
द्भावैराङ्गिकसात्त्विकैः स्फुटरसं मातस्तदालोक्यताम् ॥१४॥

ह्रींकारत्रयसंपुटेन मनुनोपास्ये त्रयीमौलिभि-
र्वाक्यैर्लक्ष्यतनोस्तव स्तुतिविधौ को वा क्षमेताम्बिके ।
संलापाः स्तुतयः प्रदक्षिणशतं संचार एवास्तु ते
संवेशो नमसः सहस्रमखिलं त्वत्प्रीतये कल्पताम् ॥ १५ ॥

श्रीमन्त्राक्षरमालया गिरिसुतां यः पूजयेच्चेतसा
सन्ध्यासु प्रतिवासरं सुनियतस्तस्यामलं स्यान्मनः ।
चित्ताम्भोरुहमण्टपे गिरिसुता नृत्तं विधत्ते रसा-
द्वाणी वक्त्रसरोरुहे जलधिजा गेहे जगन्मङ्गळा ॥ १६ ॥

इति गिरिवरपुत्रीपादराजीवभूषा
भुवनममलयन्ती सूक्तिसौरभ्यसारैः ।
शिवपदमकरन्दस्यन्दिनीयं निबद्धा
मदयतु कविभृङ्गान्मातृकापुष्पमाला ॥ १७ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य-
श्रीमदाद्यशंकरभगवत्पादाचार्यवर्यैः
प्रणीता श्रीमन्त्रमातृकापुष्पमाला
संपूर्णा ॥

---

